RESEARCH INSTITUTE
MYLAPORE, CHENNAI-4

राजमान्यराजश्री

श्रीमति

कुक्कुटक्रोडनगरे नूतनपुरे दक्षिणालये संजातया

श्रीदेवीनामधेयया बालराज्ञ्या प्रणीतः

# भागवतचम्पू प्रथमभागः ।

प्रथमादितृतीयान्तः स्तबकः ।

---

शुकमगलाख्याग्रहारे महामहोपाध्याय इति प्रख्यातनाम्ना

सूरिवरेण नारायणशर्मणा परिशोधिता ।

---

1925

PRINTED AT

THE NORMAN PRINTING BUREAU, CALICUT.

मूल्यं १० आणका.

राजमान्यराजश्री

श्रीमति

कुक्कुटक्रोडनगरे नूतनपुरे दक्षिणालये संजातया

श्रीदेवीनामधेयया बालराज्ञ्या प्रणीतः

# भागवतचम्पू प्रथमभागः।

प्रथमादितृतीयान्तः स्तबकः।

शुकमंगलाख्याग्रहारे महामहोपाध्याय इति प्रख्यातनाम्ना

सूरिवरेण नारायणशर्मणा परिशोधिता।

1925

PRINTED AT

THE NORMAN PRINTING BUREAU, CALICUT.

मूल्यं १० आणका.

# ॥ चम्पूभागवतम् ॥

## प्रथमस्तबकः ।

हैरम्बपादयुगळं वितनोतु लक्ष्मीं
    ब्रह्मद्रुमाग्रनवपल्लवमत्युदाराम् ।
उत्सेकचौर्यनिपुणं सरसीरुहाणां
    विघ्नाद्रिदारणशताग्रधुरन्धरं मे ॥ १ ॥

करोतु वाणी नटनं सदा मे जिह्वांचले पंकजयोनिपत्नी ।
चराचरात्मा करुणापयोधिर्व्यासात्मजश्चाशिषमातनोतु ॥ २ ॥

व्यासात्मजास्यकमलस्रुतकृष्णगाथा-
    माध्वीपरीक्षिदवनीश्वरपुण्यगोष्ठ्याम् ।
प्राग्या पपात मनुजान् परितः पुनाना
    सा मे तनोतु मतिशोधनमार्यपेया ॥ ३ ॥

सदसि बुधजनानां मान्यमानः पिता मे
    श्रुतकुलधनविद्याख्यातिमान् वासुदेवः ।
हृदयमुकुरपंकं क्षाळयन् सत्कृपाब्धि-
    र्विशदयतु मनीषां सन्मनीषी द्विजेन्द्रः ॥ ४ ॥

अश्वत्थसंस्थापनमुख्यपुण्यैरसुदुश्चरैर्या नियमैस्तथान्यैः ।
असूत पुत्रीमिह मां सवित्री करोतु सा मे भवुकं दिविष्ठा ॥ ५ ॥

गुरुपवनपुरस्थः स्मेरवक्त्रारविन्दः
कलयतु मम वासं चित्तपद्मे मुकुन्दः ।
गुरुजनपदपद्मं सम्यगाराध्य कर्तुं
हरिचरितमुदारं चम्पुरूपं यतिष्ये ॥ ६ ॥

गद्यं — पुरा खलु कुरुनगरे तक्षकान्मृत्युरभ्यसीति शृंगिमुनिशाप-श्रुतोनशनव्रतेन दिव्यर्षिवृन्दपरिवृतपार्श्वः परीक्षिच्छुकाचार्यमुखाम्बुजाद्रवि-सोमवंशविस्तारं निशम्य तदन्तरं संक्षेपोदितं कंसारिचरितामृतं निपीयापरि-तृप्तमनाः सविस्तरं श्रोतुमत्यन्तकांक्षया भागवतेभ्यः संसारनाशनकथाप्रसंग-सादरमाचार्यं व्यासात्मजमभिवन्द्यैवमपृच्छत् । अयि भगवन्,

कौन्तेयान मम पूर्वकान् पुरुकृपानावा यथा गोष्पदं
दुस्तार्यं धृतराष्ट्रपुत्रसुमहानीकाम्बुधिं तारयन् ।
अश्वत्थामविसृष्टनिर्भरमहत्ब्रह्मास्त्रनिर्यत्प्रभा-
दग्धं मामसजीवयत्करुणया चक्रायुधो यः पुरा ॥ ७ ॥

संक्षेपोदिततत्कथामृतझरीलिप्रपानान्न मे
तृप्तिश्चेतसि जायते ननु पुनश्शंकापि किंचास्ति मे ।
रोहिण्यास्तनुजस्य देवकसुतागर्भोद्भवत्वं कथं
गण्यं स्यात्परमः पुमांस्तदुदरे भूयोविरासीत् कृते ॥ ८ ॥

जातोप्यानकदुन्दुभेर्यदुकुले घोषं कुतो यातवान्
पश्चात्तत्र मुदावसत्कति समाः स्वं मातुलं किं कृते ।
देवोहन्मधुरां गतः कति पुनर्जाया बभूवुः क्षितौ
कालञ्चाप्यवसत्कियन्तमखिलं मोदात्समाचक्ष्व मे ॥ ९ ॥

ग— एवमतिभक्त्यानुयुञ्जन्तं स्वशिष्यभावविनीतं विष्णुरातं कृ-पार्द्रमनाः शुकमुनिस्स्मेरवदनाम्बुजस्त्वेवं वक्तुमारभत । अयि विष्णुरात

तवेदृशानुयोगेनात्यन्तहृष्टोऽहं त्वच्चित्तसन्देहसन्दोहापनोदनार्थं सकलदुरितापनोदि हरिविहारविशेषकथामृतं सविस्तरमेवाखिलमाख्यास्ये । शृणु, पुरा देवासुरयोधने दानवारिणा हतास्सर्वेऽपि दानवाः कर्मशेषेणावनीतले भूपालास्संबभूवुः । ततस्तद्भारपीडिता क्षमाप्यक्षमा गोरूपिणी सत्यलोकमासाद्य स्वं परितापं पद्मजायावेदयत् । तदानीं –

ब्रह्मा भूमिभरं निवेद्य गिरिशं गौर्या साकं जवात्
क्षीराम्भोनिधितीरमेत्य मुनिभिर्देवैश्च धात्र्या सह ।
अस्तौषीद्विविधैः स्तवैरुपनिषद्गूढं रमावल्लभं
तावत्तद्धृदितं गिरीशसविधे देवानुपेत्याब्रवीत् ॥ १० ॥

हे देवा धरणीभरं विरमितुं कारुण्यधामा विभु-
र्देवक्यां मधुरापुरेऽतिमहिते शौरेस्सुतस्सम्भवेत् ।
तन्मायाऽवतरिष्यति व्रजतले नन्दात्मजा तत्क्षणं
शेषोऽप्यग्रजभावमेष्यति हरेर्मातुस्समाजस्तदा ॥ ११ ॥

यूयं सर्वेऽपि देवाः परिचरणकृते पद्मनाभस्य धात्र्यां
जायध्वं गोपवंशेष्वुरुतरमहिते वृष्णिवंशेऽन्यवंशे ।
जायेरन्देवनार्यः प्रमुदितकरणा याववनौ गोपनार्य-
स्सर्वेषामैक्यकाले सुखमिह भविता भूतधात्र्यास्तथा नः ॥ १२ ॥

ग— एवं प्रभुनिदेशं सर्वानप्युक्त्वा धात्रीमपि समाश्वास्य स्वधाम याते पद्मजे गिरिशप्रमुखास्सर्वेऽपि दिवौकसस्तत्तदावासमासाद्य सामोदमासन् । तत्रान्तरे—

कंसो भोजपतिस्त्वशेषविभवं शौरेर्यदूनां पते-
राहृत्य स्ववशं निनाय तरसा दुर्मानसस्तत्क्षणे ।

चेतस्यानकदुन्दुभिस्तु शरणं मत्वा जगत्पालकं
कालौचित्यविदा वसन्निजगृहं भोजेश्वरं संश्रयन् ॥ १३ ॥

ग— तत्रान्तरे– उग्रसेनजस्तु वसुदेवं स्वसहजाया देवकतनूजाया- स्सदृशं पतिमीशाज्ञया मन्यमानस्सम्मन्त्र्य बन्धुभिरानाय्यानकदुन्दुभिं भगि- न्या विवाहं यथावन्निर्वर्त्य विविधानि यौतकान्यतिप्रेम्णा दत्तानि प्रतिगृह्य स्वावासाय गच्छतोस्तयोर्दम्पत्योस्तोपार्थं स्वयमेव सारथ्यं परिगृह्य नानाको- लाहलान्वितश्शनकैर्निर्जगाम । एवं साघोषं गच्छतस्तस्याग्रे अशरीरिणी का- चिद्वाण्युच्चचार ॥

अस्यास्ते स्वसुरष्टमं सुतमवेह्यात्मान्तकं कंस भो
तत्त्वं चिन्तयमार्गमेकमधुनैवात्मावनार्थं द्रुतम् ।
उक्त्वैवं विरराम वाक्च दिविजा तावत्स भोजाधिपः
क्रुद्धः स्वां सहजां निहन्तुमचिरात्केशेग्रहीत्खड्गभृत् ॥ १४ ॥

ग—तदानीं सर्वलोकेषु हाहेत्याक्रुशत्सु कुतोपि त्राणमलब्ध्वात्मानमेवा- लोक्याक्रन्दमानायाः स्वपत्न्यास्सन्तापं परिहर्तुमनास्सत्वरमुत्थायानकदुन्दुभि- र्भोजपतेस्स खड्गं करं प्रगृह्णन्नेवमवादीत् ॥

मा मा कार्षीर्महात्मन् स्वसृवधमचिरान्मुञ्च बालां रुदन्तीं
कीर्तिस्ते विश्रुता सा प्रचरतु भुवने निष्कलंकैव राजन् ।
त्यक्त्वा केशं भगिन्याः परिणयनमहेनैव सम्प्राप्य गेहं
भूयः सञ्चिन्त्य सम्यक् तव हितमखिलैरीप्सितं यत् कुरु त्वम् ॥

ग— एवंविधानेकोक्त्यापि तस्य विकारभेदमदृष्ट्वैवानकदुन्दुभिः के- वलं प्रियाजीवितेप्सुर्भूयोप्येवं सशपथमवादीत् । अयि भोजवंशप्रदीप नेयं हि ते मृत्युरतदिमां विमुञ्चास्या जातमात्रानेव सर्वान् शिशून् पितैवाहं त्वत्पाणौ प्रदास्ये ॥

श्रुत्वैवं वसुदेवमन्त्रिवचनमसौ क्रोधं स्वसुः केशम-
प्युत्सृज्योग्रगवन्नरेन्द्रविधिना शान्तिं ययौ भोजराट् ।
भूयस्तस्य मतेन मन्दमगमच्छौरिश्शतांगे वहन्
भीतां देवकनन्दिनीं हरिमुखभ्रष्टां कुरंगीमिव ॥ १६ ॥

सम्प्राप्यानकदुन्दुभिस्स्वसदनं सानन्दमेणीदृशा
देवक्या सहितो वसन्मणिगृहे कन्दर्पलीलापरः ।
काले सा सुषुवे कुमारमनघं शौरिस्समीक्ष्यात्मजं
खिन्नोप्यन्तरगाद्वहन् करतले बालं स कंसान्तिकम् ॥ १७ ॥

ग— तदानीमुग्रसेनजस्तु वसुदेवस्य सत्यसंगरत्वं दारकञ्चालोक्यातिहृष्टमनाः अयि सखे अहमिमं प्रथमं भागिनेयमष्टमदारककृते नूनं न हन्मि त्वमेनं सम्यक्पालयेत्युक्त्वा शौरिं सादरं विससर्ज । सोप्यन्तस्तद्वाक्यमविश्वसन्नेवालयं प्रविश्य प्रवृद्धशोकाकुलाया देवक्यास्सकाशे स्तन्यप्रदानार्थमात्मजमशाययत् । तदनन्तरं शौरिर्द्वादशदिने गर्गोद्दिष्टे मुहूर्ते स्वात्मजस्य कीर्तिमानिति नामाहूय यथावत् पालयामास च ॥

तावत्कंसमुपेत्य नारदमुनिः प्रोचे जगद्रोहिणं
यूयं दानववंशजा हि निखिलास्त्वन्यान् सुरारिद्रुहः ।
सर्वान् यादवगोपवंशजनुषो जानीहि युष्मद्वरं
व्याहन्तुं धरणौ जनिष्यति यदोर्वंशे स नारायणः ॥ १८ ॥

ग— तदा तु सुरांशानां बलमितरेषां दौर्बल्यं च भूयादित्यवेहीत्युक्त्वा यथागतं गते नारदे भोजेश्वरोप्यतीव संक्रुद्धस्सत्वरं मत्तमदावलवत् प्रधाव्य शूरात्मजसदनमासाद्यात्मभगिनीतद्धवौ कारागृहस्थौ विधाय प्रेमातिशयात्पूर्वं संरक्षणाय दत्तं स्वभागिनेयं पादयोः प्रगृह्याश्मपृष्ठे पोथयित्वा शोणि-

तलि खींगे गतजीवितं तं बालकं मातुरेव पुरतोऽक्षिपन् वत । एवं तत्तदन्तरे भूयोपि जातमात्रान् भागिनेयान् व्यापादयन्नावसथे सुखमवसच्च ॥

स्मृत्वा पूर्वभवं कदाचिदधुनाप्याप्तुं मृतिं माधवाद्
भोजेशो निगळैर्निबध्य पितरं भक्तं हरेस्तद्गृहे ।
भूयोरिष्टमुखान् विसृज्य सचिवान् वृष्ण्यन्धकादीनरीन्
रेमे दुर्मतिरन्वहं हरिपदद्वेषाद् द्रुहंस्तज्जनान् ॥ १९ ॥

ग— ततस्तेपि भोजेश्वरात् सन्त्रस्तास्स्वार्थपुत्रकळत्रादीन् सर्वान् विसृज्य केवलं स्वस्वजीवितेप्सवः केचिद्विदेहान् केचित्कोसलान् केचिद्विदर्भानप्येवं नानादेशानुपेत्यातिशोकाकुला न्यवसन् ॥

तत्काले भोजनाथः खलमतिरवधीत् षट्मितान् भागिनेयान्
भूयोप्याधत्त गर्भं कृशतनुरुदरे देवकी शेषभागम् ।
दृष्ट्वा तेजस्तदीयं त्वधिकमभजतां दम्पती तापमोदौ
तावत्स्वामाहमायामहिवरशयनश्चिन्तयन् कार्यशेषम् ॥ २० ॥

माये गत्वा धरित्रीं द्रुतमवनिभरं हन्तुमाकृष्य गर्भं
देवक्या योगशक्त्या नय पुनरचिराद्रोहिणीं तत्सपत्नीम् ।
एष्यामो देवकीं तामवतरणकृते त्वंशभागेन ताव-
ज्जायेथा नन्दपत्न्या मम जनिसमये मत्सहायार्थमार्ये ॥ २१ ॥

ग— एवं हरिणादिष्टा सा योगमायापि देवकीगर्भमाकृष्य तत्सपत्नीं रोहिणीं नीत्वा स्वयमपि नन्दपत्न्यामतिष्ठत् । तत्रान्तरे हा हा देवकीगर्भः स्रंसित इत्याक्रोशत्सु सर्वलोकेषु पद्मनाभोपि ध्यानपथेन वसुदेवचित्तमासाद्य निर्मूलप्रचुरतत्प्रेमपदव्या तत्पत्नीं देवकीमाससाद ॥

शरद्युतिं पाण्डुपयोधरश्रीर्बभार सा जृम्भितवक्त्रपद्मा ।
स्त्रीमसास्यस्स कुचोविमुक्ताहारोभवद्भोजपवत्कठोरः ॥ २२ ॥

द्रष्टुं किलास्याम्बुजमात्मजस्य वक्षोजयुग्मं सुदृशो नतास्यम् ।
क्रमेण वृद्धिं जठरं प्रपेदे दिवौकसां चेतसि च प्रमोदः ॥ २३ ॥

जहौ शुभा भारभिया कलापं तदेवतां तारमलं चकार ।
जगाम मन्दं शनकैर्जहास तथापि दीर्घं श्वसितं कृशांग्याः ॥ २४ ॥

ग— एवं शनैश्शनैर्देवकीजठरे पद्मनाभे क्रमेणांगपूर्णतामवाप्ते ॥

बभौ न तावद्वसुदेवजाया प्राचीव काष्ठा हिमरश्मिगर्भा ।
पाण्यग्रसंच्छन्ननवप्रदीपशोभेव कारागृहसंस्थिता सा ॥ २५ ॥

तथापि कंसस्सहजां समीक्ष्य सरोजबन्धुद्युतिमेकदान्तः ।
मदीयकालं वहति स्वसात्रेत्यचिन्तयद्विस्मितधीर्नितान्तम् ॥ २६ ॥

ग— तदिदानीमयत्नवध्याया अप्यन्तर्वत्न्याः प्रमदायास्सहजाया-स्त्वमुष्या व्यापादनादयशोल्पायुर्निरयश्च मे भूयात्तज्जातमात्रमेतदीयं शिशुं वन्यमपि व्यापादयिष्याम्यथवा तेनैव हतश्चेद्दुरापं मोक्षमप्यवाप्स्ये इत्यनुचिन्तयन्नासनाटनाशननिद्रानर्मादिवसरेष्वप्यौग्रसेनिस्तद्वधोपायमेवानुस्मरन् सर्वदा लोकनाथं विद्वेषभक्त्यैवावसत ॥

शर्वस्सानुचरोखिलास्सुरगणाः श्रीनारदाद्यास्तथा
निस्संगा मुनयोन्तरिक्षगतयस्साब्जासनाः पुष्करात् ।
गन्धर्वोरगसिद्धचारणमुखास्सन्तानपुष्पावली-
र्वर्षन्तोनुनुवुः प्रभुं यदुकुले जन्मप्रवृत्तं हरिम् ॥ २७ ॥

नित्यं निर्मलमद्वयं निरुपमं वेदान्तवेद्यं विभुं
सत्यानन्दमयं पुराणपुरुषं सृष्ट्यादिलीलान्वितम् ।
देवक्या जठरस्थितं करुणया लोकावनायाधुना
नाथं त्वां जगतां पते वयमिमे वन्दामहे सर्वदा ॥ २८ ॥

श्रीमत्स्यकच्छपकिटीन्द्रमुखावतारै-
भक्तावनैकनिरतो भुवनैकनाथः ।
भूत्वावनौ यदुकुले वसुदेवसूनु-
रद्यापि पालय महीं खलभारतान्ताम् ॥ २९ ॥

ग—इत्थं नीलकण्ठपद्मासनप्रमुखास्सुरास्सर्वेऽप्यनिभक्त्या प्रपन्नार्तिह-
रं विश्वनाथं हरिं यदुसत्तम इत्याख्यामभिधाय सादरं प्रणम्य सर्वब्रह्माण्डधा-
रिणं लोकनाथमात्मगर्भाशये वहन्तीं देवकात्मजामप्यपि मानसस्त्वां मनतू-
जां निहन्तुं कंसकृतमुद्यमं सर्वं विफलमेवास्त्वित्यनुगृह्य परमया भक्त्या प्रणे-
मुः तदानीं---

मासे हरौ शशिमुखग्रहसाधुयोगे
कृष्णाष्टमीमिलितपद्मजनाथतारे ।
लग्ने वृषेऽवतरणार्थमरं विरेजु-
र्देवस्य कैटभरिपोः ककुभश्च सर्वाः ॥ ३० ॥

ताराणि रेजुर्गगनस्थितानि
फुल्लानि पंकेरुहकोरकाणि ।
आपोऽप्यरं निर्मलतामवापु-
र्द्रुमाश्च नूत्नप्रसवादिभिर्भाम् ॥ ३१ ॥

त्यक्त्वा जन्मभवं मृगाः कलहमप्यन्योन्यसक्तास्तदा
तस्थुः पुष्परसं निपीय नितरामिन्दिन्दिरास्संजगुः ।
चेरुश्शैत्यसुगन्धमान्द्यसहितास्सर्वत्र वातार्भका
भूदेवाग्निगृहे प्रदक्षिणशिखास्संजज्वलुः पावकाः ॥ ३२ ॥

चेतस्तदा साधुजनस्य हृष्टं कंसादिवैधेयमनस्तु खिन्नम्।
नेदुस्स्वयं दुन्दुभयस्सुगणां गन्धर्वमुख्या जगुरन्तरिक्षे ॥ ३३ ॥

आगत्याप्सरसोप्यकुर्वत मुदा लास्यं तदा निर्जराः
सर्वे कल्पकगुच्छसूनिचयान्मोदादवर्षन्मुहुः।
भक्त्या दिव्यतपोधना मधुरिपुं ब्रह्मात्मकञ्चानम-
न्पर्जन्यध्वनिरप्यजायत हरेर्जन्मक्षणे किञ्चन ॥ ३४ ॥

कंसस्यानुचरेष्ववोधमखिलेष्वाप्तेषु निद्रां दृढां
जाते शीतकरोदयेऽर्धनिशि सा शूरात्मजप्रेयसी।
काले पुत्रमसूत कैटभरिपुं भास्वत्सहस्रद्युतिं
मायामानुषमच्युतं नियमिनां चित्ताब्जवासप्रियम् ॥ ३५ ॥

ग— तत्रान्तरे शृंखलानद्धकरचरणस्त्वानकदुन्दुभिर्योगपद्योद्यत्सहस्रविद्विषा महनीयमकुटेनालंकृतमौलिं नीलघनस्पर्धिमहाचिकुरकलापं चञ्चरीकार्भकशोभिमुग्धालकं बालशीतांशुलोभनीयनिटिलमध्यराजमानोर्ध्वपुण्ड्रं सर्वलोकत्राणदीक्षितचिल्लिवल्लीविमोहनं करुणाश्रीलक्ष्मोपलक्षितलोचनारविन्दं तिलसुमदर्पणदक्षनासिकाग्रहृद्यवीक्षणं रत्नमुकुररुचिरगण्डबिम्बितमकरकुण्डलं बिम्बाधरकान्त्यञ्चितकुन्दोपमेयरदनिचयं भक्तलोकचित्ततापोन्मार्जनचणमन्दहासरम्याननाम्बुजं कम्बुसम्मितकण्ठलसितकौस्तुभमणिमुक्ताहारवनमालादिविविधकलापं केयूरांगदवलयांगुलीयकादिभूषालंकृतचतुर्भुजगृहीतशंखचक्रगदापंकजं भृगुपादलक्ष्मांकितरमानिवासवक्षसं रोमराजिविराजमानाखिलपंकजासनाण्डनिलयचलदलपलाशोपमेयजठरं पंकजावासाधिष्ठानपद्मकर्णिकाभासुरनाभिं मध्यदेशपरिधृतपीतांशुकावेष्टितरत्नरशनं वारणकरविलोभनोरुयुगळं रत्नमुकुरसदृक्षमृदुलजानुद्वयविराजमानं जंघाद्वयपराजितबर्हिकण्ठं प्रपदप्रभाशोषितकमठपृष्ठमदं अत्यन्तगूहनविलोभनगुल्फद्वयं निगमार्थादृश्यमानचरणारविन्दं पद्मरागदर्पणायितनखबिम्बिताखिलप्रपञ्चं सजलजीमूतस्पर्धि-

सकलप्रतीककान्ति त्रैलोक्यनाथं पद्मनाभं निजात्मजं दृष्ट्वात्यन्तविस्मित-धीरानन्दसागरे निमज्ज्योन्मज्ज्य तत्क्षणे भूमीसुराणामयुतं गवां मनसा प्रदाय मुक्तिलक्षानन्दतुन्दिलहृदुत्तमश्लोकपादारविन्दयोस्सदारो मुहुर्मुहुः प्रणम्यैवं स्तोतुमुपचक्रमे ॥

कारुण्यधाम्ने निधये गुणानामाद्यन्तहीनाय परात्पराय ।
मायानिदानाय चिदात्मने ते निरीहगम्याय सदा नमोस्तु ॥ ३६ ॥

करुणाकर ते करुणालहरी-
कणमप्यनिशं वितरस्व हरे ।
विषयार्णवतारणनौसदृशं
तव भक्तिरसं चरणाब्जतले ॥ ३७ ॥

संसारसागरनिमग्नमिमं मुरारे
सन्तारयाद्य कृपया करुणापयोधे ।
रूपं तवैतमखिलेश सदास्मदीय-
चेतस्युदेतु निखिलं त्वयि चार्पयावः ॥ ३८ ॥

योगीन्द्रदुर्लभमिदं तव पादपद्मं
दृष्टं त्वदीयकृपयैव सुरारिशत्रो ।
कंसादतीव चकितौ परिपालयावां
यत्प्राक्खलेन निहतास्तव पूर्वजाष्षट् ॥ ३९ ॥

मधुमथन विदित्वा जन्मवृत्तं तवैष्य-
त्यतिकुमतिरिदानीं भोजराड्विश्वनाथ ।
तव चरणसमीपे नास्ति भीतेर्निदानं
तदपि चपलभावादुक्तमेतत्समस्तम् ॥ ४० ॥

शीघ्रं तवेदमुपसंहर दिव्यरूपं
त्वद्भक्तलोकनिवहैर्हृदि धार्यमाणम् ।
अज्ञानिनोह्यपहरस्युगिदं जनिन्ते
आगोस्मदीयमखिलं भगवन्क्षमस्व ॥ ४१ ॥

एवं पित्रोरुदारामतिविनययुतां वाचमाकर्ण्य मोदा-
दग्रस्थौ तावुदीक्ष्य प्रणयरसवहद्दिव्यदृष्ट्या दयालुः ।
देवेशोप्यब्रवीद्वां स्मितमधुरमुखो युष्मदीयात्मजत्वं
यस्मादाप्तं मया तच्छृणु नमखिलमप्यादरात्पूर्ववृत्तम् ॥ ४२ ॥

स्वायंभुवाभिधमनोस्सुतपास्त्वजायः
काले प्रजापतिरभीव तपश्चचार ।
साक्षात्कृतस्तु तपसाहमपि प्रजास्तं
स्रष्टुं समादिशममौ च सिसृक्षुरासीत् ॥ ४३ ॥

तावत्स्वान्तमलीमसापहतये भूयोप्ययं दुश्चरं
तेनाते नियमं समर्प्य निखिलं मय्येव तौ दम्पती ।
दिव्याब्दानयुताधिकानविचलच्चित्तौ तदाहं तयो-
रीहग्रूपधृगाविरासमचिरात्तद्भक्तिहृष्टः पुरः ॥ ४४ ॥

अभिमतमखिलं मां ब्रूतमत्यन्तभक्त्या
चिरकृततपसा वां सम्प्रहृष्टान्तरंगम् ।
इति मम गिरमाकर्ण्योचतुर्भक्तिनम्रौ
पदकमलजुषौ मे मायया मोहितौ तौ ॥ ४५ ॥

ईदृग्रूपधृगेव नौ तनुभवो भूयाद्भवांस्त्वत्पदे
भक्तिश्चातिदृढा तथास्त्विति तयोर्दत्वा वरं हृद्गतम् ।
अन्तर्धानमगां मुदाध्यवसतां जायापती तौ तदा
पृश्नीसूनुरहं बभूव सुतपाश्चेतद्विदित्वासृजत् ॥ ४६ ॥

ग—पुनरपि कस्मिंश्चिन्मन्वन्तरे पृश्नीसुतपसौ काश्यपदाक्षायण्या-वभूतां । तदाहमप्युपेन्द्रोवतरमेवमितरजन्मस्वपित योर्युवयोरात्मजत्वं । मयाप्तं तदा मन्मायामोहितहृद्भ्यां युवाभ्यां विस्मृतं तद्रूपमिदानीं चेतसि वां स्मर्तुमेवं प्रदर्शितम् ॥

निस्तीर्य संसारमहापयोधिं पुवे मयि प्रेममयोडुपेन ।
सायुज्यमन्त्ये व्रजतं भवेस्मिन्यदीप्सितं चेतसि वां तथास्तु ॥

कंसात्तात बिभेषि चेद्व्रजपदं नीत्वास्तबालाकृतिं
गूढं मां सहसा तदागमनतः पूर्वं यशोदासुताम् ।
आनीयात्र ततः प्रदर्शय पुरः कंसस्य तं शृंखला-
बन्धश्चापि कवाटयोश्च युगपन्मुच्येत तावत्स्वयम् ॥ ४८ ॥

एवं निगद्य पितरौ शिशुवेषधारी
नाथो रुरोद पदपाणितलं विधुन्वन् ।
जाता व्रजे निखिललोकविमोहिनी सा
मायापि नन्दगृहिणीजठरात्तदानीम् ॥ ४९ ॥

भोजेश्वरानुगगणे स्मृतिहीनचित्ते
तावत्स्वयं विघटिते च कवाटबन्धे ।
कर्तुं शिशोर्विनिमयं व्रजमाशु गन्तुं
चक्रे मतिं स गळितान्दुकपादहस्तः ॥ ५० ॥

न वद्भृंगसमद्युतिं निजसुतं धृत्वा कराब्जे व्रजं
गच्छत्यानकदुन्दुभौ द्रुततरं जीमूतमालास्तृते ।
विद्युद्दीपततिर्निभस्यनितरां रेजे समं गर्जितै-
र्जातां वृष्टिमथो फणादशशतै रुन्धन्ननन्तोन्वगात् ॥ ५१ ॥

मन्दारपुष्पनिवहान्यभिवर्षमाणा
दिव्यर्षिवृन्दसहिता गिरिशप्रधानाः।
दृष्ट्वा हरिं श्रुतिनिगूढमतिप्रहृष्टा
व्योम्ना ययुर्दिविषदस्सहिता वधूभिः ॥ ५२ ॥

ग— एवं महोत्सवेन गच्छन्तं पुण्डरीकाक्षमात्महस्ताम्बुजयोरति भक्त्या वहन्नागतः पद्मनाभतातस्त्वगाधहृदानिभीषणाया मिवनन्दनायास्तीरमासाद्य तान्नदीमेवमवादीत ॥

कालिन्दि देहि गतये सरणि मुरारेः
सूर्यात्मजे त्वरितमित्युदितं निशम्य।
शौरेर्द्विधा त्वपससार रवेस्तनूजा
तीर्त्वा जगाम यमुनां कुतुकेन शौरिः ॥ ५३ ॥

गत्वा गोकुलमाशु तत्र विवृतान्दृष्ट्वा कवाटां स्तदा
सुप्तां वीक्ष्य विलासिनीं व्रजपतेर्मायाबलात्सानुगाम्।
सूतीतल्पगतं विधाय तनयं धृत्वा करे दारिका-
मायातस्तिमिरावृतेन स पथा भूयोविशत्तां नदीम् ॥ ५४ ॥

यदातरत्तां यमुनां महात्मा शौरिस्तु सा पूर्ववदेव पूर्णा।
आगत्य बालां जगदीशमायां स शाययामास च दारपार्श्वे ॥ ५५ ॥

गत्वा पुनश्शयनदेशमसौ पुरेव-
स्स्वीयं कराब्जचरणाधृतशृंखलस्सन्।
निद्रामवाप च पुरेव दृढं बबन्धु-
श्शीघ्रं कवाटनिचयं स्वयमेव चित्रम् ॥ ५६ ॥

ग— तत्क्षणे चिन्मय्या दारिकायाः पर्जन्यध्वानसदृक्षं रोदनरवं निशम्य प्रतिबुद्धा भोजेश्वरानुचरास्तत्किमित्यजानन्तोऽभिद्रवन्तस्ससंभ्रमं भोजेश्वरमुपगम्य देवकीप्रसूतिं शशंसुः ॥

श्रुत्वा कंसस्स्वमृत्युप्रभवमतिजवाद्भागिनेयं जिघांसुः
कालं स्वं शीघ्रगत्या प्रतिसरणिपतन्नुत्थितश्चाभ्यगात् ।
सूतीगेहं भगिन्याः खलमतिमनघा भ्रातरं वीक्ष्य भीता
जाया शौरेस्सशोका सकरुणमवदद्गाढमालिङ्गच पुत्रीम् ॥ ५७ ॥

पूर्वं षट् तनयास्त्वया मम हता दुष्कर्मणैवाधुना
जातामष्टमगर्भतस्तु तनयामेनां निहन्या न मे ।
एतां मे यदुराज देहि चरमां कारुण्यतः पूर्वज
त्यातीं तामवधीर्य दुर्मतिरसौ जग्राह पुत्रीं बलात् ॥ ५८ ॥

धृत्वा पादौ कराभ्यां खलमतिरभितः क्रोधसम्भ्रान्तचेता
यावत्पाषाणपृष्ठे स्वसुरथ तनयां क्षेप्तुमैच्छत्तदा सा ।
हस्तादुत्प्लुत्य शीघ्रं सुरपथवसतिः कंसमुच्चैरवोच-
द्भीतं वीक्ष्यात्मगात्रं बहुकरविधृतोग्रायुधं विष्णुमाया ॥ ५९ ॥

दुष्टात्मन्निह मां किमर्थमधुना हन्तुं वृथोद्युक्तवा-
नेषाहं तव विप्रियं किमनघा व्यातन्वती बालिश ।
पूर्वारिर्भुवि ते हरिः क्वचिदगाज्जन्मात्र नाशाय ते
तेनैवाप्स्यसि मृत्युमाशु नितरां संचिन्तय स्वं हितम् ॥ ६० ॥

उक्त्वैवं भोजनाथं सुरगणविनुता विष्णुमाया धरण्यां
त्रातुं लोकाननिष्टाद्वहुविधवपुषा द्वादशाख्यासमेता ।
दृष्ट्वा रूपं तदीयं भयविवशमतिर्गर्हयन्नात्मकृत्यं
कंसस्त्वामुच्य बन्धं झटिति स भगिनीं तत्पतिं चैवमूचे ॥ ६१ ॥

हा हा मूढधिया मया नु दुरितं किं किं युवाभ्यां कृतं
पूर्वं किन्त्वशरीरिवाक्यमनृतं जातं यदेतन्मया ।
सर्वं पापमकारि ते तु विधिना पुत्रा हतास्तेकृता-
स्तापं मा सहजे वृथा ननुभवेज्जातस्य नूनं मृतिः ॥ ६२ ॥

ज्ञानाभावान्मयेदं कृतमिति हृदये कल्पयन्तौ भवन्तौ
कारुण्येनाव तां मां खलमिति निगदंस्तापतप्तस्स कंसः ।
दम्पत्योश्शोकरोषाधिककलुषहृदोरापतत्पादमूले
तावन्नियातकोपस्सविनयमवदत्कंसमुत्थाप्य शौरिः ॥ ६३ ॥

उक्तं यत्तदशेषमेव नृपते तद्वत्र शंकान्नृभि.
भोक्तव्यं विधिकल्पितं मनसि तत्क्लेशस्त्वया नास्ति मे ।
तावद्देवकनन्दनापि पदयोः हृष्टाननं भ्रातरं
कोपादीनि जहौ न साधुहृदये मानादिकं तिष्ठति ॥ ६४ ॥

ग— — तदनु भोजनार्थोऽपि तयोस्स्वावासगमनायानुज्ञां दत्वा प्रसन्न-
हृद्भ्यां ताभ्यामप्यनुज्ञातस्स्वयमपि प्रहृष्टः पुरं गत्वा तां निशां कृच्छ्रादनैषीत ॥

अन्येद्युरभ्याशमुपेयुषस्स्वं प्रलम्बकेशिप्रमुखानमात्यान ।
जगाद कंसो वसुदेवपत्न्याः प्रसूतिमन्यन्निखिलञ्च वृत्तम ॥ ६५ ॥

निशीथिनीवृत्तममात्यवर्याः श्रुत्वाखिलं विस्मितचेतसस्ते ।
उपायमूचुर्हृदि चिन्तयन्त. प्रभुं परिम्लानमुखारविन्दम ॥ ६६ ॥

जातश्चेद्धरणीतले नरपते त्वां हन्तुमेकः कचि-
द्दासास्ते वयमाशु बालकगणाञ्जातान्दशाहान्तरे ।
हन्मस्तानखिलांस्तदा तव रिपुस्तेष्वेक एव ध्रुवं
भूयात्ते दिविषद्गणा करुणया मुक्तास्त्वया संगरे ॥ ६७ ॥

लोके त्वत्सदृशः क्वास्ति समरे धर्मप्रहारी पुमान्
जेतुं त्वां भुवने न कोपि नियतं ब्रह्मापि विद्यापरः ।
दत्वा स्वार्धकळेबरं गिरिसुतावश्यो वसन्नन्वहं
लोकेशो गिरिशोपि नन्न तु भयं ताभ्यां भवेत्ते क्वचित् ॥ ६८ ॥

इत्थं चेदपि दुर्धरा रिपुगणास्त्यक्ता भवेयुर्ध्रुवं
तत्तेषां गदवत्समूलविहतिर्युक्ता सुराणां ततः ।
मूलं दैत्यरिपुस्तदीयहतये गोब्राह्मणानां वधः
कर्तव्यं पुरतस्समादिश जवादस्मान्तदर्थं प्रभो ॥ ६९ ॥

इत्थं दुर्मन्त्रिवाक्याद्द्विगुणितकुमतिर्भोजराट् प्राहिणोत्तान्
द्वेष्टुं सर्वत्र साधूनथ सुररिपवस्तन्नियुक्तास्समस्ताः ।
नानारूपेण चेरुर्भुवि हरिचरणान प्रक्षिपन्तस्तदानी-
मूपुस्सर्वे प्रहृष्टा हरिपदकमले साधवोप्यर्पयन्तः ॥ ७० ॥

यो भूभरावहतयेवततार धात्र्यां
वंशे यदोस्सुविमले वसुदेवसूनुः ।
कृष्णस्समे हरतु सर्वगदं स्वभक्त-
संरक्षणव्रतपरः करुणापयोधिः ॥ ७१ ॥

चम्पूभागवते प्रथमस्तबकस्समाप्तः ॥

# द्वितीयस्तबकः ।

घोषे तु गोपाधिपतिस्सुतन्तं
विलोक्य संहृष्टमतिर्द्विजातीन् ।
आनीय दत्वा सुबहूनि दाना-
न्यकारयत्स्वस्त्ययनं सुतस्य ॥ १ ॥

कृत्वा सौजातकर्म द्रुतमथ नितरां हृष्टचेता द्विजेभ्यः
प्रादाद्द्विशतसहस्रं शिशुसहितगवां भूषणैर्भूषितानाम् ।
नानारत्नाम्बराद्यान्यपि मुहुरधिकं भूसुरैर्हृष्टचित्तै-
र्दत्ताशीर्नन्दगोपस्सुतजननमहं घोषयामास घोषे ॥ २ ॥

ग— तदनु नन्दगोपस्य पुत्रजन्म निशम्यात्यन्तहृष्टेष्वागतेषु सू-
तमागधवन्दिगायकादिषु तत्तद्विद्याः प्रकटयत्सु व्रजान्तरचत्वरादिष्वपि विधि-
वत्सम्मार्ज्यांशुकमाल्यादिभिर्वितानवत्सु कृतेषु गोपेष्वपि वृषभवत्सगोजाला-
नि निशातैलनिर्मलोदकैः स्नापयित्वालंकृत्य स्वयमपि स्नात्वालंकृत्यागतेषु
गोपीष्वपि नन्दनन्दनदिदृक्षया परिचारिकाधारितदुग्धदधिनवनीतकुम्भास्त्वा-
गत्य बालकं विलोक्यातिहृष्टमानसास्त्वभितो नन्दसुतं स्थित्वानन्दाद्विष्णु-
चरित्रगीताद्यैः क्रीडन्तीषु गोकुलं सर्वत्रानन्दविवशमभूत् ॥

गोपालबालाश्च मिथस्तदानीं
क्रीडारणं चक्रुरतीव हृष्टाः ।
केचित्पयोभिस्सिषिचुः प्रमत्ता
विचिक्षिपुर्दाड्नवनीतमारात् ॥ ३ ॥

इत्थं महोत्सवयुते स्वगृहे तु नन्द-
स्सम्भोज्य तान्द्विजवरान्विधिवत्प्रहृष्टः ।
सम्प्रेष्यमागधमुखानपि भोजनाद्यै-
रानन्दपूर्णहृदयानकरोत्समस्तान ॥ ४ ॥

रोहिणी च तदा हृष्टा कृत्वा दानानि भूरिशः ।
विधिवन्न्यवसन्नन्दपुत्रजन्मदिने शुभा ॥ ५ ॥

तावद्रमारमणवासनिदानतस्त-
द्रेजे व्रजं प्रतिदिनं निखिलर्धियुक्तम् ।
लक्ष्मीस्तदाप्रभृति भूतल एव वासं
चक्रे मही च नितरां विरराज तस्मात् ॥ ६ ॥

तदानन्तरं—

त्रातुं स्वं कुलमादरान्नृपतये प्रत्यब्ददेयं करं
दातुं शीघ्रमहं व्रजामि मधुरामद्यैव गोपा व्रजम् ।
यूयं पालयतेति सर्वपशुपानादिश्य नन्दः करं
दत्वा कंसमुपेत्य शूरजगृहं भूयोविशत्सत्वरः ॥ ७ ॥

आयातं वीक्ष्य नन्दं स्वसदनसविधे सारिपानन्दनस्तं
प्रत्युद्गम्यानयित्वा द्रुतमथ सुहृदं सन्निवेश्योपविष्टः ।
हृष्टः पप्रच्छ घोषे निरवधिकसुखं बान्धवानां निवासं
वार्धक्ये पुत्रलाभं मुहुरपि नितरां श्लाघयन्नेवमूचे ॥ ८ ॥

सखे तवैतत्सुतजन्म चित्तं
तनोति मे चातितरां प्रहृष्टम् ।

त्वदीयपुत्रं हृदये मदीयं
मन्ये मदीयात्मजमेव नूनम्  ॥ ९ ॥

निरामयौ किन्तु विवर्धनस्सुतौ
मनोहरौ भाग्यनिधेश्च तव तौ ।
अभाग्यधाम्नोपि ममाभवत्सखे
सुतोदयस्तं सुतरां सुखप्रदः  ॥ १० ॥

इत्थं सतोषमुदितं वसुदेववाक्यं
श्रुत्वा प्रहृष्टहृदयस्तमुवाच नन्दः ।
घोषेऽधुना प्रमुदिता निवसन्ति सर्वे
का वा भविष्यति विपत्तदहं न जाने  ॥ ११ ॥

लोकेखिलं विदितमेव हि सर्वं सुतांस्ते
श्रुत्वा हतान्नृपतिना निखिलान्नितान्तम् ।
खिन्नोस्मि चेतसि वयं जगदीशमाया
लीलामृगा हि निखिला किमिह प्रकुर्मः  ॥ १२ ॥

भूयस्त्विदानीं तनयां निहन्तु-
मियेष जातां कुमतिस्स कंसः ।
तदा तु सा व्योमगतेति चैकं
मया समाकर्णितमद्भुतं तत्  ॥ १३ ॥

मायां मत्वा समस्तां हरिपदशरणस्तिष्ठ तत्साधु नूनं
जातः कश्चित्सुतश्चेत्प्रवयसि पितरौ पालयेत्किं स पुत्रः ।
को वैतद्वेत्ति तादृक्तनयमयमहारज्जुबन्धं दुरन्तं
त्यक्त्वाराद्यो धरण्यां निवसति भुवने भागधेयी स मर्त्यः ॥ १४ ॥

इत्थं गोपपतेर्निशम्य वचनं प्राह स्म यन्मारिषा
मृनुस्तं नितरां प्रमोदभरितोऽस्म्यालोकनान्मत्सखे ।
अस्मद्द्रोहचिकीर्षया कुमतयः केचिच्चरन्ति स्वयं
नाशायैव समन्ततो द्रुततरं गत्वा प्रजा पालय ॥ १५ ॥

ग---इत्थं सुहृत्तमेनानकदुन्दुभिनोदितां गिरं निशम्य सन्त्रस्तमानसो नन्दगोपोऽपि वसुदेवमामन्त्र्य शकटमधिरुह्य गोकुलं प्रति गच्छन् मार्गमध्ये व्रजे किं किमापदभूदिति चिन्तयन्नन्तरंगे विश्वम्भरमेव शरणं मन्यमानः प्रययौ ॥

तदन्तरे कंसनियोगेन दशाहाभ्यन्तरजातान् बालकान् निहन्तुं परितः भ्रमत्सु दानवगणेषु मायाविप्वन्यतमा पूतनाभिधा कर्कशमानसा स्वेच्छारूपिणी काचिदासुरी तत्रतत्र बालकान् स्तन्यदानाक्षेपादिना कालवशं नीत्वा चरन्ती साक्षान्नारायणावासं घोषमेत्य स्वमायया कस्याश्चिद्गोपामणेर्वेषमभजत् ॥

केशपाशधृतमालतीसुमविवासिताखिलदिगन्तरा
फुल्लपंकजनिभानना रुचिरभूषणाद्द्विगुणितप्रभा ।
बालमारणविधानिदर्पितकरीन्द्रकुम्भकुचमण्डला
नाथमार्गणसमागतेव हरिवल्लभा द्रुतमुपाययौ ॥ १६ ॥

द्वारदेशमुमागतां भ्रमितारविन्दकराम्बुजां
यानर्निर्जितपंकजासनवाहहंसलसद्गतिम् ।
पूतनामभिवीक्ष्य तद्द्युतिविस्मिता बहुमान्य तां
मन्दिरं प्रति गन्तुमाशु सृतिं ददुः पुरपालकाः ॥ १७ ॥

उपेत्य सान्तर्गृहमाशु माया-
मनोहरी नाशकरी शिशूनाम् ।
ददर्श मात्रा परिलाळ्यमानं
शिशुं मनोज्ञे नळिने शयानम् ॥ १८ ॥

ग— तावत्तु सर्वज्ञो बालकाकृतिः पद्मनाभोपि पूतनाचिन्तितं विज्ञायात्मन्येव मायया स्वतेजःपुञ्जमाच्छाद्य लोचनाम्बुजे निमीलयन्नेवाम्बन्नलोकनाथो निद्रित इव शेते स्म ॥

अंगारं भस्मनान्तर्हितमिव मुदिता वीक्ष्य बालाकृतिन्तं
नाथं निद्रायमाणं निजहृदि सफलां स्वागतिं चिन्तयन्ती ।
स्पर्शे स्पर्शे निषण्णा सविधभुवि शिशुं लाळयन्तीव तूर्णं
सुप्तं तं रज्जुमत्या द्विरसनमिव साप्याददे पाणिपद्मे ॥ १९ ॥

ग— तदानीं पश्यन्त्योरेव तद्रूपविस्मितयोर्नन्दविलासिनीगेहिण्योस्सर्वलोकविमोहिनी सापि नन्दात्मजं परिरभ्यांके निधाय जिघ्रती करालगरळरूपितं पयोधरं वदने प्रददौ ॥

वासुदेवः कराब्जाभ्यां गृहीत्वा तत्पयोधरौ ।
निरस्य काकोळरसं पपौ सकुतुकं तदा ॥ २० ॥

पीत्वा मातुरिवाशु तदनुसुतावक्षोजकुम्भं मुहुः
स्तन्यं किञ्चिदनाप्नुवन्प्रकुपितो गोपालनाथात्मजः ।
तत्प्राणानपि पातुमारभत तत्तीव्रव्यथापीडिता
सान्त्वैर्मोचयितुं पयोधरमभून्नालं तदीयाननात ॥ २१ ॥

ग— तदनु दुस्सहया यातनया दन्तान्मिथः संघट्याधरं च सन्दश्याभेक मुञ्च मुञ्च स्तनमिति मुहुर्व्याहरन्ती बलाच्छिशुं मोचयन्त्यपि

भृशं पद्मनाभवक्त्रसम्पीडितस्तना सा पूतना तु पद्भ्यां मुहुर्मुहुर्महीं ताड-
यन्ती रोमान्तनिर्यच्छोणितकणा स्वनादप्रतिनादिताशामुखा विवृत्तनेत्रातीव
घोराकृतिर्निजप्राणवायूनरविन्दाक्षवदनारविन्दे प्रदाय धरणीपृष्ठे पपात ॥

तदट्टहासध्वनिना तदानीं
चचाल तत्पातरवेण चोर्वी ।
ससागरा—,तध्वनिभिन्नकर्णा-
स्समागमन्गोपजना भयार्ताः ॥ २२ ॥

अत्यायताधिकसुपीवरकायभीमां
दंष्ट्राकरालवदनामतिघोरनेत्राम्
सेतुप्रमाणचरणां व्रजवासिनस्तां
दृष्ट्वा मृतामधिकविस्मयमापुरन्तः ॥ २३ ॥

तदानीन्तु—

खेलन्तमर्भकमुदीक्ष्य तदीयवक्ष-
स्यादाय गोपसुदृशस्त्वरितं प्रहृष्टाः ।
सन्तापसम्भ्रमसमाकुलचेतनायाः
पाणौ ददुर्द्रुततरं व्रजनायिकायाः ॥ २४ ॥

आदायार्भकमाशु सापि नितरामालिंग्य मूर्धन्यथो
जिघ्रन्ती मुदिता जवादनुचरैस्साकं यशोदा पुनः ।
रक्षार्थं तनयस्य गोमयमुखैर्द्रव्यैर्यथावत्क्रियाः
कृत्वा चेतसि देवता मुहुरपि ध्यात्वा सुखेनावसत् ॥ २५ ॥

ग— तत्रान्तरे ससंभ्रमं जवात्समागतो नन्दगोपस्तु शक्रकुलिश-
निर्भिन्नपक्षं महाशैलमिव धरणीनिपतितं पूतनाकळेबरं दृष्ट्वात्यन्तविस्मित-
धीरन्तरेवं व्यचिन्तयच्च ॥

चित्रं चित्रमभूद्यथार्थमखिलं शूरात्मजेनोदितं
पूर्वं तन्नियतं समस्तविदसौ भूयात्स योगीश्वरः।
सञ्चिन्त्यैवमनेकमित्रभृतकैस्सार्धं स गोपाधिपः
छित्वा तत्कुणपं परश्वथमुखैः संस्कर्तुमारब्धवान् ॥ २६ ॥

तावत्श्मशानोद्गतधूमगन्धि-
र्ववौ मरुत्त्वागरुगन्धवाही।
न चित्रमेतद्यदसौ मुकुन्द-
वक्त्रे प्रदायैव कुचं मृताभूत् ॥ २७ ॥

पयोधरप्रदानतो हरिं निहन्तुमुद्यता-
प्यसौ जवाद्ययौ गतिं प्रशस्तमां सुदुर्लभाम्।
सदा मुदा हृदा जगन्निवासमर्चयन्जनः
शुभां नु कां गतिं व्रजेन्नवेद्मि नदयानिधे ॥ २८ ॥

ग— तदा तु पूतनाकळेबरोद्भूतागरुधूमवासनामिळितपवमानग-न्धानुभवप्रतर्पितघ्राणेन्द्रियास्सर्वेपि पौरलोकाः किं किमेतदिति तद्देशमागत्य चारुरूपधारिण्या दनुजांगनाया बालकलाळनपयोधरदानादि चरितं स्वयमेव विनाशं च व्रजनायिकापरिचारकादिमुखादाकर्ण्यात्यन्तविस्मितमानसा मिथस्सानन्दमेवं जगदुः॥

हा हा शिशुवधायाता स्वयमेवासुरी मृता।
शिशुश्चानामयो लब्धो मधुभित्कृपयैव नः ॥ २९ ॥

चित्ते पंकजनाभमेव शरणं मत्वा प्रभोर्नः स्थित-
स्यापत्काचन नो भवेत्परमितो बालोप्ययं भाग्यवान्।

धन्या नन्दविलासिनी च नितरामभ्यास्सकाशस्थिते:
पुण्यं नश्च बभूव खल्विति जनाः स्तुत्वा ययुस्वान् गृहान् ॥

नन्दोप्यादाय पुत्रं किल यमसदनात्सन्निवृत्यागतन्तं
मूर्ध्न्याघ्रायातिहृष्टो मुहुरपि परिरभ्याकुलः प्रेमभारान् ।
चित्ते विश्वैकनाथं हरिमनुकलयन्गोपवंशप्रमोदं
कुर्वन्पत्न्या स्वगेहे सुखमवसदरं लालयन्नात्मजञ्च ॥ ३१ ॥

यः स्तन्यदानमिषतोखिलबालनाश-
कर्त्रीं निहत्य दनुजां शिशुलीलयैव ।
मुक्तिं ददौ करुणया स कृपापयोधि-
र्मुक्तिं प्रयच्छतु गदान्मम नन्दसूनुः ॥ ३२ ।

चम्पूभागवते द्वितीयस्तबकस्समाप्तः ॥

---

# तृतीयस्तबकः ।

---

इत्थं जगद्गुरुकथामृतपानहृष्टः
सौभद्रसूनुरभिवन्द्य तपोधनेन्द्रम् ।
भक्त्यान्वयुंक्त च ततो हरिवृत्तमन्यद्-
व्यासात्मजोपि मुदितो नृपतिं जगाद ॥ १ ॥

शृणु बाल्यचरित्रमत्युदारं
शिशुरूपस्य हरेस्त्वयानुपृष्टम् ।
श्रवणेन सुखप्रदं नराणां
निखिलं पाण्डववंशशीनभानो ॥ २ ॥

आनीयजन्मर्क्षदिनेपि नन्दो
महीसुरादीन् विविधैः स दानैः ।
अतोपयन्नन्दसुतोथ निद्रा-
मगात्तदा दानवकालरात्रिः ॥ ३ ॥

— तदा यशोदापि निद्रायमाणमर्भकं शकटस्याधस्तात्तलिमे शा-
याय्यागतान्बन्धुजनान् सम्मानयन्ती चचार ॥

तत्कंसनियोगतः प्रचरतां सर्वत्र देवारिणा-
मेकस्तच्छकटं प्रविश्य गगने शीघ्रं भ्रमन्नन्तिकम् ।
प्राणस्य हरेरयादखिलविन्मायां विदित्वासुर-
स्याधून्वन्निव सम्भ्रमेण चरणौ नाथोप्यरोदीद्भृशम् ॥ ४ ॥

सन्ताडितं कमलनाभपदाम्बुजाभ्या-
मागत्पपात भुवि तच्छकटं प्रभग्नम् ।
दृष्ट्वा तदद्भुतमवापुरतीव चित्ते
बाला भ्रमं कुतुकमप्युपतल्पसंस्थाः ॥ ५ ॥

उच्चैर्निशम्य रुदितं निज नन्दनस्य
तावत्ससंभ्रममुपेत्य सुतं गृहीत्वा ।
पप्रच्छ नन्दगृहिणीसुतरोदहेतुं
तत्सन्निधौ विहरतः परितः कुमारान् ॥ ६ ॥

अथोचुरेनां व्रजनाथपत्नीं
बालाः शिशोः पादहतिप्रभग्नम् ।
भूमौ महानः पतितं जवात्त्वं
पलायनञ्चालि भिया तदानीम् ॥ ७ ॥

इत्थं बालकभाषितं हृदि तदा विश्वासयोग्यं नत-
न्नन्दोप्येतदुदन्तमाशु चकितः श्रुत्वा जगामान्तिकम् ।
तावत्साह्पतिं शिशोर्विपदियं दुर्दैवतापीडया
जाता तन्नियतं जवात्प्रतिविधिः कार्यो धरित्रीसुरैः ॥ ८ ॥

एवं प्रिया निगदितं स निशम्य नन्दः
प्रोवाच तद्द्विजवरान्युगपत्ततस्ते ।
सञ्चिन्त्य कर्मरभसात्खलभूतनाशा-
याराधनादिककुभां विधिवद्वितेनुः ॥ ९ ॥

कर्मान्ते नन्दगोपः प्रमुदितहृदयो दक्षिणां भूसुरेभ्यो
दत्वा भक्त्या यथार्हं पुनरितरजनान्संप्रहृष्टान्विधाय ।
सर्वान्संप्रेष्य भूयस्सपदि च शकटं योजयित्वा यथाव-
ज्जायायुक्तस्सतोयं सुतमपि सततं लाळयन्नावसच्च ॥ १० ॥

ग—इत्थं शकटोपगते दानवे विनष्टे भूयोप्येकस्मिन्दिने भोजेश्वरा-
नुगेषु दानवेषु तृणावर्ताभिधान. कोपि सुरारिर्घोषमेत्य मायया स्वप्रतीकमा-
च्छाद्य नन्दात्मजान्तिकमुपाययौ । ततस्सर्वेश्वरो भगवान् नन्दसूनुरपि दा-
नवमायां विज्ञाय तद्वधोपायं विचिन्तयन्नात्मगात्रं गुरुस्वयुतं चकार ॥

तावन्नन्दविलासिनी निज सुतं स्तन्यं पिबन्तं करे
सानन्दं दधती कथञ्चन शिशुं निर्वोढुमप्यक्षमा ।
तल्पे शाययितुं पदं प्रचलितुं चैकं यदाक्षमा
तावद्भूमितले निषद्य तनयं साशाय यत्तत्र तम् ॥ ११ ॥

तं शाययित्वा तनयं धरण्यां
स्मृत्वा पदाब्जं मधुसूदनस्य ।

तस्यां गतायां दितिजोपदास्य-
संक्षालनार्थं जगृहे मरुत्तम् ॥ १२ ॥

चक्रानिलाकृतिधरे दनुजेच्युतनं
धृत्वान्तरिक्षमनुयाति हरिन्मुखेषु ।
सान्द्रेषु घोरतिमिरानिलरेणुपूरै-
र्नन्द्रप्रियाप्यनवलोक्य सुतं सुशोच ॥ १३ ॥

ग—तावद्व्रजनायिकायामुरस्संताड्य भूमौ निपत्योच्चैर्विलपन्त्यामितरासु गोपविलासिनीष्वपि नन्दनन्दनं विचिन्त्यात्यन्तखिन्नासु गोकुलनाथेपि निज नन्दनं स्मृत्वा परिमितपरितापान् दारुवन स्थिते गोपालेष्वपि लोचनोन्मीलनायाप्यक्षमेषु गोगणेष्वपि वत्सान विमुच्य लांगूलमप्युन्न मय्याभितः प्रधावत्सुकृच्छ्रेणश्चण्डानिलेपि तिरोहिते सर्वाशास्वपि कथञ्चिद्वीक्षणीयासु भूयोप्यन्तरिक्षान् पतितां पाषाणपतत्रिकण्टकादिवृष्टिं विलोक्यात्यन्तभीत्या पलायत्सु गोपालगणेषु गोकुलमचिन्तनीयां दुर्दशामभजत ॥

तावत्सर्वजगद्गुरुं व्रजपतेर्नन्दनं नयन्नम्बरं
दैत्योयं मम चिन्तितं सफलमित्याचिन्त्य चित्ते यदा ।
हन्तुं कैटभनाशनं व्यवसितश्शीघ्रं तदा शैलतो-
प्यात्मानं स विभुर्गुरुत्वमनयद्भीत्ये बभूवन्वन वपुः ॥ १४ ॥

ग— तत्क्षणे महामेरुसमानमुत्तमश्लोकार्भकगात्रं धृत्वोत्पतितुमम्बरमशक्नुवन् स दानवस्तु शिशुं वियोक्तुमनियन्त्रवानपि त्रासेनेव तद्बाहुद्वन्द्वगाढवेष्टितकन्थरतयाभ्यन्तरनिरुद्धश्वासानिलस्सन्तापविवृत्तनेत्रो विहायसि भ्रमन्नेवान्तकान्तकशिलीमुखदाग्निनारकासुगात्मजत्वन् धरण्यां पाषाणपृष्ठे गतासु पपात ॥

एवं गतासोः पततस्सुरारे-
धात्र्यामुरस्थं शिशुमस्खलितम् ।
दृष्ट्वाशुगोप्यः परिगृह्य दोर्भ्या-
मालिङ्ग्यपाणौ निदधुर्जनन्याः ॥ १५ ॥

तावत्तदीय हृदि जातमतिप्रमोदं
वक्तुं न पन्नगवरोपि शशाक किञ्चित् ।
मोदार्णवे परिममज्जचिरन्तु नन्दो
गोपाश्च हर्षभरिता गिरमित्थमूचुः ॥ १६ ॥

हं हो गोकुलनाथभाग्यमधुना लब्धो क्षतो यत्सुत-
श्चित्रं बालकभृङ्निपत्य गगनान दैत्योपि मृत्युं गतः ।
जातो सौ तदुरःस्थितो मधुभिदा बालोपि नूनं सदा
स्मृत्वा चेतसि माधवं निवसतो नापद्भवेन्नः प्रभोः ॥ १७ ॥

एवं वदत्सु विविधं पशुपेषु नन्दः
पुत्रं निरीक्ष्य हृदि माधवमेव मत्वा ।
शृण्वात्मजस्य वचनं तदतिप्रशंसन
पत्न्या सुतेन हरिणा च सहाध्युवास ॥ १८ ॥

ग— इत्थं केषुचिद्दिनेष्वतीतेष्वानन्दसागरनिमग्ना व्रजनायिका तु पन्नगशायिनं निजात्मजमुत्संगे निधाय पयोधरं निपाययन्ती मदीयसूनुर्निर्मल इत्युच्चैर्जहास ॥

तावन्मुनीन्द्रगणपूजितपादपद्म-
श्शर्वप्रियस्स भगवान् करुणापयोधिः
मन्दस्मितेन जननीहृदये प्रमोदं
तन्वन्विजृम्भितमुखः क्षणमास्तबालः ॥ १९ ॥

तावत्सा तनयस्य वक्त्रकमले द्वीपान्ददर्शाखिलान्
मेरुञ्चान्यगिरीन्वनानि सरितोप्यब्धीनशेषानपि ।
दिक्पालानपि देवताश्च निखिलानागान्ग्रहानम्बरं
चन्द्रादीनपि भूतराक्षसपिशाचादीननन्तामपि ॥ २० ॥

ग— इत्थं सा सचराचराणि चतुर्दशभुवनानि तनूजवदनारविन्दान्तरे निरीक्ष्य संत्रासकम्पमानांगी सपुळका निमीलितलोचना मदीयसूनुर्भार्गवीरमण एवेति यदा चेतसि चिन्तयामास तदैव तन्निखिलमपि क्षणाद्धरिमायया विस्मृत्य सततं निजनन्दनं लाळयन्ती सुखमुवास ॥

इति सा सुतलाळनमात्ररता
दिवसान्यनयद्व्रजनाथवधूः ।
क्वचिदह्नि ददर्श मुनीन्द्रवरं
पशुपालवरो यदुवंशगुरुम् ॥ २१ ॥

नन्दोप्यालोक्य गर्गं व्रजसविधगतं मारिषासूनुवाचा
प्रत्युद्गम्या निनाय स्वसदनमुपवेश्यादरात्तद्रपीठं ।
भक्त्या तत्पादतीर्थं निज शिरसि वहन्हृष्टचेताः पदाब्जे
नत्वा तं संयमीन्द्रं सविनयमवदत्प्राञ्जलिर्वाचमेवम् ॥ २२ ॥

आगत्या मद्गृहे ते मुनिवर नितरां पावनोहं कृतार्थ-
श्चाभूवं व्याहता मे विपदपि निखिला त्वत्पदाब्जोदकेन ।
सर्वेषां वर्णिनामप्यखिलविदवनीदेववर्गो गुरुस्त-
त्सर्वज्ञस्त्वं मुहूर्ते यदि भवति मुदा बालयोर्नाम कुर्याः ॥२३॥

बालयोरुभयोस्सम्यग्जातकञ्चोच्यतां त्वया ।
शिष्यभृत्यौ समौ ज्ञात्वा त्रातुमर्हसि मां मुने! ॥ २४ ॥

ग— इत्थं सविनयं गोपालनाथगिरं निशम्यानन्दतुन्दिलहृदयो गर्गमुनिस्तु तद्वदनांबुजं विलोक्य मन्दस्मितं विधायानकदुन्दुभेश्चिन्तितमनुस्मरन्नपि तन्निगूहन्नेवैवमवादीत् ॥

तव वचनमतीव साधु नूनं
मम हृदयेपि मतं त्वदीप्सितं यत् ।
यदि कृतमधुना मयाभिधानं
तव तनयस्य शुभायतन्न भूयात ॥ २५ ॥

कंसस्य चेतसि सदाप्यशरीरिवाक्यं
स्मृत्वा स्वसुश्च तनुजां समुदीक्ष्य गाढम् ।
शंकारिततच्छिशुगणान्प्रहितेषु हन्तुं
भृत्येषु केचिदिह चैत्यमृतिं ह्यवाप्ताः ॥ २६ ॥

देवकीतनयो नीतश्शौरिणा गोकुलं प्रति ।
पुरैवास्य हृदिस्था सा श्रुत्वैतत्सुदृढा भवेत् ॥ २७ ॥

ग— इत्थं तपोधनेन्द्रस्य सूनृतां भारतीं निशम्य सचिन्तो नन्दगोपस्तु चेतसा तदर्थमुपायं विमृश्य तत्पादयोः प्रणिपत्यैवं विज्ञापयामास ॥

तपोनिधे तेभिमतं मतं मे
भयां तदर्थं सृतिमत्र काञ्चित ।
मया सहैवैत्य गृहं निगूढं
कार्यं त्वया बालकनामकर्म ॥ २८ ॥

ग— इत्थं पूर्वमेवात्मनोनुमतां नन्दभारतीं निशम्यात्तकौतूहलो गर्गमुनिस्तथैवेत्यभिधायात्मनैव पूर्वनिर्णीतं मुहूर्तं प्रतीक्ष्य केनाप्यलक्षित एव गणनायकप्रमोदनादिकर्मविधिवद्विधाय स बालके मातरावागन्तुं समादिदेश ॥

तदा मुनीन्द्रान्तिकमापपुत्रं
करे वहन्ती वसुदेवजाया ।
मुनिस्तदीयं निखिलं प्रतीकं
विलोक्य मोदादिदमाहवाक्यम् ॥ २९ ॥

रमयिष्यति नूनमर्भकोयं
तनुकान्त्याखिललोकलोचनान् ।
तदमुं सुतमाह्वयेद्य रामं
बलभद्रश्च भवेद्बलीनराणाम् ॥ ३० ॥

कामपालाभिधो भूयादयं नारीजनप्रियः ।
संकर्षणश्च जननीजठराकर्षणात्पुरा ॥ ३१ ॥

तत्तन्निदानात्पुनरस्य भूया-
दनेकनामेति मुनौ ब्रुवाणे ।
आदायपाणौ तनयं यशोदा-
प्युपा जगामास्य मुनेस्सकाशम् ॥ ३२ ॥

ग— तदा तपोधनेन्द्रो गर्गस्तु यशोदासुतं लोचनपुटेन पीत्वान्त-रंगे निधायानन्दात स्मेरवदनाम्बुजो नन्दगोपमेवं जगाद ॥

त्वत्सूनुर्धर्मनिघ्नश्शुभमतिरवनौ पालनार्थं जनानां
जातः पूर्वं युगे सौ धवलतनुरभूद्रक्तवर्णो द्वितीये ।
सामोदं द्वापरेस्मिन्पुनरयमभवच्छ्यामळांगश्चतुर्थे
भूयात्कृष्णः करिष्याम्यहमिममधुना कृष्णनाम्ना श्रुतन्तन ॥

वसुदेवसुनो जातः पूर्वं बालोयमेकदा ।
तदस्य वासुदेवाख्या प्रथिता भविताववनौ ॥ ३४ ॥

भवेत्सुतोयन्त्वतिमर्त्यकर्मा
तदस्य तत्तत्समयेभिधानम् ।
भूयादनेकं त्ववधारयत्वं
लोकावने सादरमर्भकन्ते ॥ ३५

ग— अथवा कृतं संदेहेन अयि गोपालनाथ तवात्मजस्य गुणा प्रवक्तुं वसुन्धरायां कस्यापि नैपुण्यं नास्ति । धर्मसहितं साधुजनानवन्तम रातिगणान निघ्नन्तं कृपावन्तं प्रख्यातकीर्तिमन्तमनामयन्तेर्भकं सर्वथा रमा रमणसदृशमेव जानीहि । किं बहुना तवाखिलजन्मकृतपुण्यमेवार्भकभावमुपे तमित्यहं मन्ये । तदेनं साधुपालयांखिलं तव कल्याणमेव भविष्यतीत्यव धारयेत्युक्त्वा महानुभावस्स मुनिर्बालकयोराशीर्वादमप्यतनोत ॥

श्रुत्वा गर्गगिरं समुद्व्रजपतिर्नत्वा ददौ दक्षिणां
कल्याणाय निजात्मजस्य बहुशो रत्नानि सा गेहिणी ।
हृष्टानन्दविलासिनी च नितरां तुष्टान्तरंगं मुनिं
चक्राते द्रविणैर्निजात्मजकृते नामक्रिया मंगळे ॥ ३६ ॥

सर्वं गृहीत्वा मुदिते प्रयाते
दत्वाशिषं बालकयोर्मुनीन्द्रे ।
नन्दस्स्वकीयं जननं हृदन्ते
मत्वा कृतार्थं सुखमावसञ्च ॥ ३७ ॥

ग— ततः क्रमेण गोकुले पूर्वपक्षशीतभानुरिव प्रतिदिनं प्रवर्धमानौ मर्त्यवेषमनोहरौ तौ रौहिणेयनन्दात्मजौ शुचिस्मितेन जनन्योर्हृदंबुजं विकासयन्तौ धरण्यां पाणिजानुभिः परिभ्रमन्तौ जानुमवलंब्य कथञ्चिदुत्थितौ विवशचरणं पतन्तौ रुदन्तौ पुनरप्युत्थितौ मन्दमन्दं विचरन्तौ चारुलीलया पश्यतां मानसलोचनान्यप्याजह्रतुः ॥

भूयः क्रमेण रदनांकुरमुग्धवक्त्रौ
चारुस्मितेन जननीहृदयं हरन्तौ ।
बालौ विलोक्य निखिलं हृदि विस्मरन्त-
स्सर्वेपि तद्विहृतिमेव निरीक्ष्य तस्थुः ॥ ३८ ॥

द्वीपिदिव्यनखकण्ठभूषणौ
मध्यदेशपरिवीतमेखलौ ।
पादपद्मधृतचारुनूपुरौ
चेरतुर्व्रजतलेभितोप्युभौ ॥ ३९ ॥

आत्मपृष्ठमनुधावमानयो-
र्बाल्ययोस्स्वकुतुकं दिदृक्षया ।
घोषवासिषु निवर्त्य कन्धरां
लक्षयत्स्वतिभियेव धावतुः ॥ ४० ॥

स्वेदधूळिपरिधूसराननौ
संभ्रमेण निजपार्श्वमागतौ ।
आत्मजौ प्रमुदिते प्रगृह्य तौ
मातरौ स्नुतकुचे बभूवतुः ॥ ४१ ॥

निपीय मात्रोर्मुदितौ पयोधरौ
भूयोपि तौ शौरिसुतौ वितेनतुः ।
अनीतिकर्माणि बहूनि गोकुले
शिशुत्वतुल्यानि तदाखिलेश्वरौ ॥ ४२ ॥

नित्यं प्रातः प्रबुद्धौ मधुमथनबलौ हृष्टचित्तौ सवित्र्योः
स्तन्यं पीत्वा विहारैर्व्रजपतिनिकटं प्राप्य मोदं विधाय ।

धृत्वा पात्रं जनन्योः पशुगणसविधं यातयोर्दोहनार्थं
गत्वा शीघ्रं पुरस्तात्स्वयमपि विहृतिं चक्रतुर्वत्सकानाम् ॥४३॥

ग— तदनु भूयोपि वत्सानां लांगूलानि हस्तपंकजाभ्यां युगपदेव गृहीत्वा लंबमानौ स्वार्भकौ प्रमोदाल्लेलिह्यमानास्समागता गास्समालोक्य तच्छृंगप्रहारशंकिनीभ्यां जननीभ्यामागत्प्रगृह्य निक्षिपन्तौ वत्सान् विमुच्य दुग्धं निपाययन्तौ भाजनानि मूत्रभरितानि विधाय हसन्तौ मातरौ वञ्चयित्वा निशिताग्रेण दण्डेन क्षीरघटान निर्भिद्यातिनिर्मलं पयः स्वयं निपीयावशिष्टं बिडाळसात्कृत्वा सवित्र्योस्समागतिं दृष्ट्वा तरसा प्रधावमानौ त्रासेनेव रोदमानौ मध्येपथं बालानि सत्वानि पाणिना प्रगृह्य विहरन्तौ तद्धावनाच्छोचमानौ लक्षणीयानि पदार्थानि मिथः प्रहृत्य नाशयन्तौ तौ रामकृष्णौ बालचापलेनैव गोकुले सुखं विजहृतुः ॥

कृष्णोग्रजेन सह वीक्ष्य निजानुबिम्बं
ज्योत्स्नातपादिषु धरास्थित एव तेन ।
कृत्वा चिरं विविधनर्ममुदा स्वचेष्टां
वीक्ष्यात्र तन्त्वनुययौ कुपितो ग्रहीतुम् ॥ ४४ ॥

अम्भोस्तीरमुपेत्य पूर्वजनुषा सार्धं हरौ निस्वनं
कुर्वत्युच्चतरं ततःप्रतिरवं श्रोतुं प्रपश्यत्यधः ।
पूर्वं यः कमठाकृतिर्जलनिधौ शैलं स्वपृष्ठे दधौ
जग्राहार्भकमेव तं व्रजपतेः पत्नी प्रभीता जवात् ॥ ४५ ॥

क्रीडन्तमेवं सततं तनूजं
विलोकयन्ती न गतान्यहानि ।
विवेद मातापि समीक्ष्य लोलां
गोप्यश्च तस्थुः स्मृतिहीनचित्ताः ॥ ४६ ॥

गोपांगनास्स्वादुफलादि दत्वा
नीत्वा वशं बालकमम्बुजाक्षम् ।
आदाय दोर्भ्यामुपगूहनाद्यै-
स्संलालयन्त्यो दिवसानि निन्युः  ॥ ४७ ॥

ग— तत्रान्तरे भक्तप्रियस्स भगवान गोपांगनाभिः करात्करं गृहाद् गृहमपि कुतूहलेन नीतस्तासां मनांसि क्षीरसागरसुताहृदयमोषणदक्षैरमृतायमानैरपांगभ्रूविलासाद्यैरपहरन् तत्रतत्र सञ्चरन् पादपद्मपांसुभिर्गोकुलमभितः पावनमकरोत् ॥

बालैर्वयस्यैस्सह सञ्चरन्तं
गृहे गृहे नन्दसुतं सरामम् ।
आहूय तद्दर्शनलालसास्ता
ददुर्मुदा क्षीरगुळादि गोप्यः  ॥ ४८ ॥

ग— तदनन्तरं पर्यायेण गोपांगनाभिर्जनन्या च प्रदत्तैर्नवनीतमधुक्षीरपायसादिभिरपरितृप्तमनाः किल नन्दात्मजोप्यत्रसमग्रानीक्षो मोषणलीलामपि विधातुमारभत ॥

प्रतिवासरमंगनागृहेभ्यो
नवनीतादि हरन्पुमान्पुराणः ।
भृशमाप मुदं बिडाळकानां
नवनीतं प्रददद्वनौकसां च  ॥ ४९ ॥

दुग्धं पीत्वातिशीघ्रं घटमपि शकलीकृत्य गूढं प्रयान्तं
दृग्गात्मानं प्रचक्रुर्यदि किमपि रुषं गोपनार्यस्तदानीम् ।

तिष्ठन्नारान्मुकुन्दश्शुचिहसितरुचा त्याजिताशेषकोप-
स्ताभिर्दत्तं प्रगृह्णन्मधुगुळनवनीतादि मोदात्प्रयायात् ॥ ५० ॥

ग— भूयोप्येकदा नन्दसूनुर्मोषणार्थं कस्याश्चिन्मन्दिरं गत्वा तत्र चौर्यावसरमदृष्ट्वान्तःप्ररुष्टोपि बहिःप्रसन्नतामभिनीय चरन् प्रसुप्तं बालकं नखाग्रेण पीडयन् रुदन्तं तनूजमाश्वासयितुं तस्यां गतायां निगूढं मोषणमप्यकरोत् । एवं विविधेनोपायेनापि गोपांगनानां चौर्याद्युपप्लवं वितन्वन् हृष्टचेताः गोकुले सुखं विजहार ॥

इत्थं बालकसाहसं व्रजपतेः पत्नीमुपेत्याब्रुवन
गोप्यस्साह च ता मुदा शिशुरिदं कुर्यान्नमे गोपिकाः ।
अज्ञानादथवा कृतं यदि मुदा सर्वं क्षमध्वं तद-
प्येनं लाळयतार्भकं नहि शिशुर्दण्ड्योधुना नन्दनः ॥ ५१ ॥

शृण्वन्नेवं भारतीं मातुरन्त-
स्तुष्टोत्यन्तं माधवो मातरुच्च ।
गूढं कर्तुं मोषणं संप्रवृत्त-
श्चित्ते किंचित्संशयं साप्यवाप ॥ ५२ ॥

काले तस्मिन्नेकदा नन्दपत्नी
स्तन्यं दत्वा नन्दनं सन्निवेश्य ।
मित्रैस्सार्धं स्नातुकामा सखीभि-
र्गोपस्त्रीभिर्मित्रपुत्रीं जगाम ॥ ५३ ॥

ग— तावत्पुण्डरीकाक्षो भगवान नन्दकुमारोपि जनन्यान्तर्गृहे शिक्ये निधाय यथावत्पालितं कलशभरितं मधुरं पयः प्रपातुकामस्तमेवावसरं साधुमन्यमानोन्तिकस्थान् बालकान् यष्ट्या भीषयन्नाराद्विधायातिशीघ्रं शिक्यान्तिकमुपगम्य तत्स्पर्शनाक्षमस्संभ्रमाकुलो बभूव ॥

पुरा त्रिपदसम्मितत्रिभुवनोपि तत्स्पर्शने-
प्युपायमनुचिन्तयन्नतिशिशुस्स्वयं नन्दजः ।
विलोक्य सविधेभितोप्यतिमहत्तदोलूखल-
न्निरीक्ष्य तदुपानयत्कलशसन्निधिं कृच्छ्रतः ॥ ५४ ॥

उलूखलस्योपरि पीठमेकं
निक्षिप्य भूयोप्यपरं धरण्याम् ।
आरुह्य तेनैव पथा कथञ्चि-
ज्जग्राह दोर्भ्यां मधुभित्स शिक्यम् ॥ ५५ ॥

तावत्तत्पादपीठं द्रुतमवनितलञ्चाप नन्दात्मजस्त-
द्दोळालीलां वितन्वन्हृदि भुवि पतितुञ्चाक्षमोत्यन्तभीत्या ।
भक्तानां भीतिहन्ताप्यतिविवशमतिर्बाष्पवर्षी त्वरोदी-
त्तां बालास्तद्धनीं कतिचन जननीमाह्वयामासुरन्ये ॥ ५६ ॥

तनयस्य दशां व्रजनाथवधूरवधार्य ससंभ्रमबालगिरा ।
व्यसनेन भयेन गळद्गमना द्रुतमाप सुतं सहिताळिजनैः ॥ ५७ ॥

यशोदाभिवीक्ष्यात्मजं डोळलीला
वितन्वन्तमस्राभिवर्षाविलाक्षम् ।
कराब्जेन शिक्यं कथञ्चिद्वहन्तं
स्थिता नासिकान्यस्तहस्तांगुळिस्सा ॥ ५८ ॥

अवेक्ष्य शोकातुरमात्मजन्तं
कृपार्द्रधीस्सा परिगृह्य दोर्भ्याम् ।
मूर्धन्युपाघ्राय परिष्वजन्ती
प्रेम्णा ददौ स्तन्यमतीव धन्या ॥ ५९ ॥

यशोदा तनूजं स्तनं पाययन्ती
सखीराह चौर्यं विचिन्त्यात्मसूनोः ।
अहं किन्नु कुर्यां ब्रवीध्वं तदस्मि-
न्ननीतिं वितन्वत्यरं गर्हणीयाम् ॥ ६० ॥

ग— इत्थं नन्दपत्नीगिरमाकर्ण्यातिधन्या आभीरनार्गोप्ययि गोकुलेश्वरि बालमेधसानेनात्मजेन साम्प्रतमन्वहं कृतमागस्सर्वमस्माभिर्धन्यया त्वयापि क्षन्तव्यं नायमिदानीमेव शासनीयो नूनमित्यूचुः । एवं वदन्तीषु गोपांगनासु भाग्यवती नन्दगोपप्रियापि सर्वलोकेश्वरस्य मंगलदेवतावल्लभस्यात्मसूनोर्वदनांबुजमतिप्रेम्णा मुहुर्मुहुर्वीक्ष्यानिमात्रं हसन्ती गामुदागमेवमवादीत् ।

मत्सूनो तव मानसे कथमभूदन्धत्वमेनादृशं
कष्टं साहसमद्य किन्नु हृदये कर्तुं त्वया चिन्तितम् ।
एतत्साधु न चिन्तयेति जननीवाचं निशम्यात्तभीः
कृष्णोप्याह कलं हसन्छलयुतां वार्तामिमां मातरम् ॥ ६१ ॥

मातस्त्वयि स्नानकृते गतायां
दुग्धादिसम्यक्परिपालितं किम् ।
नवेति वेत्तुं द्रुतमेत्य शिक्ये
दोर्भ्यां गृहीते भयमापमेवम् ॥ ६२ ॥

एतन्मा कपटं विचिन्तय हृदा किञ्चिन्नमे कैतवं
मातस्तद्दुरितं यदन्यहृदयेनाचिन्तितं चिन्त्यते ।
मात्राहर्निशमार्जितं कृतमिदं त्रातुं मया साहसं
दुग्धाद्योतुगणात्त्वमद्य हृदये शंकां कृथा मान्यथा ॥ ६३ ॥

अन्यबालकवत्तृष्णा दुग्धादौ हृदि नास्ति मे ।
साधुशीलं च मां विद्धि जननि त्वं सदा हृदि ॥ ६४ ॥

पूर्वेद्युर्ननु मत्पिता प्रमुदितस्त्वंके निधायाह मां
शीलं मे तनयस्य साध्विति तदा तत्किं त्वया नो श्रुतम् ।
नो मे चेतसि किञ्चनापि कपटं ह्येवंविधं तन्मुदा
त्रातुं मां यदि निर्दिशस्यखिलमप्यन्यूनतामेष्यति ॥ ६५ ॥

भोक्तुं त्वयादत्तमलं न चित्ते
ममातितृष्णेति गिरं सुतस्य ।
निशम्य नैपुण्ययुतां यशोदा
प्रीता परिष्वज्य ददौ स्तनं च ॥ ६६ ॥

ग — भूयोपि जनन्यां तं तनूजं वत्सलतया परिष्वज्याघ्राय प्रहृष्टं धरण्यां निधायान्यत्कार्यं विधातुं गन्तुमुद्युक्तायां सर्वजगद्गुरुः पूतनान्तको नन्दजोप्येवमवादीत् ॥

अयि जननि जवात्त्वं कुत्र गच्छस्यदत्त्वा
प्रतिनवनवनीतं मूल्यमत्राद्य किञ्चित् ।
सुमहदिह मयायत्साहसं वातुमेत-
त्कृतमपि तदिदानीं विस्मृतं किं भवत्या ॥ ६७ ॥

इति निगद्य विदार्य रदच्छदं स्थितमवेक्ष्य सुतं व्रजनायिका ।
विवशधीर्नवनीतमतिद्रुतं तनयपाणितले निदधौ च सा ॥ ६८ ॥

ग— तदनु तद्दृष्ट्वा स्मेरवदनारविन्दो नन्दसूनुर्भूयोपि मातुर्नवनीतं लब्धुमुपायं विचिन्त्यैवमवादीत् । अयि मातः किमेतत्त्वया कृतं पूर्वजस्य निर्मलपदार्थप्रदानादहमिवैकहस्तस्य नवनीतप्रदानादितरपाणिः किं मन्येत त-

श्चिन्तयेत्यात्मजवचनं निशम्यातिविस्मितायां तस्यां यशोदायां मधुद्विषो वामपाणौ च ह्य्यंगवीनमानीय प्रदातुं गच्छन्त्यां लोकनाथो नन्दात्मजस्तज्जवेन भुक्त्वा हाहा मदीयपाणेर्नवनीतं वायसेनापहृतमहं मन्द एवेत्युक्त्वा विलपन्नतिष्ठत् ॥

दृष्ट्वा यशोदा स्वतनूजचेष्टां भृशं हसन्ती करयोर्द्वयोश्च ।
समं ददौ भाग्यवती तदानीं ह्य्यंगवीनं कबळं मुरारेः ॥ ६९ ॥

तावन्मुग्धस्मितेनामृतकरकिरणस्यापि मन्दाक्षकर्त्रा
गोपालाधीशसूनुः पुनरपि जननीमाह किंचिद्विनोदम् ।
मातर्मे पूर्वभुक्ते प्रतिनवनवनीतेधुना भुक्तमेत-
त्संरुध्यात्यन्तखेदं जनयति तदहं क्षीरपानोत्सुकोस्मि ॥ ७० ॥

उक्त्वैवं लोचनाब्जे मुहुरपि नितरां घूर्णयन्तं कुमारं
दृष्ट्वा दीर्घं श्वसन्तं हृदि सुतवचनं मन्यमाना यथार्थम् ।
माता दुग्धं च दत्वा भयविवशमतिर्नन्दनायातिशीघ्रं
पश्चात्पप्रच्छ खेदस्स तव तनय किं शान्त इत्यात्मजन्तम् ॥ ७१

ग— इत्थं मातुरनुयोगं निशम्य पयःपानहृष्टचेता मुकुन्दोपि मुग्धहासमधुरां गामेमवमवादीत् ॥

एवं न चेदवदमम्ब ममाद्य दुग्धं
ह्य्यंगवीनमपि किं वितरेर्द्रुतन्त्वम् ।
व्याजं तदर्थमिदमुक्तमिति ब्रुवाणो
भूयश्चकार विहृतिं मधुभिद्वयस्यैः ॥ ७२ ॥

ग— एवमन्वहं प्रतिमन्दिरं सञ्चरन् नन्दसूनुस्स्वसेवार्थं जातानां गीर्वाणनारीणां गोपांगनानामात्मसेवाफलं प्रदित्सुर्भूयोपि मोषणलीलां वित-

न्वन तत्रतत्र विचचार । तदनु दुग्धनवनीतमधुकदळीफलपायसादिपदार्था-न्नन्वहं मुषित्वाश्नतस्तत्तद्भाजनमपिभिन्दतः कृष्णस्यानीतिकर्मणा विवशीकृतास्सर्वा अप्याभीरनार्यस्त्वञ्जसा युगपदेव साधुशीलां गोकुलेश्वरीमुपेत्य नन्दनविहितं तापमखिलमप्येवं विज्ञापयामासुः ॥

त्वत्सूनुः कमलेक्षणः प्रतिदिनं दुह्यत्यमूस्सर्वथा
　कस्मात्त्वं सुतचेष्टितं प्रति शुभे चिन्तां न धत्से हृदि ।
बालानां नवनीतदुग्धमधुगपूपादिचौर्यं स्वत-
　स्सिद्धं भाजनभञ्जनञ्च कुरुते बालस्तवायं हि नः ॥ ७३ ॥

शिक्यस्थं भृशमुन्नतं घटमयं स्प्रष्टुं करेणाक्षमः
　पीठं कञ्चिदुलूखलञ्च विनिधायाधस्तदारुह्य च ।
दण्डेनाशु विभिद्य भाजनमपि व्यादीर्य वक्त्रं पिब-
　न्दुग्धं हृष्टमतिर्जवेन गतवानोतूंश्च संपाययन ॥ ७४ ॥

नवनीतमपि प्रगृह्य पाणौ स्वयमश्नन्निजवक्त्रमेव दत्वा ।
सविधे वसतां बिडालकानां प्लवगानामपि दास्यति प्रतृप्तः ॥ ७५ ॥

आलोक्य तच्चरितमेव वयं गताश्चे-
　त्तत्सन्निधिं स तु भयेन पलायितस्सन ।
लीयेत चेतसि निगृह्य पुनः प्रकोप-
　मागम्य तुद्यति शिशून्निशितैर्नखाग्रैः ॥ ७६ ॥

स्तेयस्यावसरो न चेत्तत इतः क्रीडन्गृहाभ्यन्तरं
　मन्दं नः कळभाषितैर्हृदि मुदं तन्वन्नुपेत्यात्मजः ।
भित्वा भाजनमक्षिदृष्टमखिलं गत्वा बहिर्नः समा-
　मन्त्र्यैवापहरन्हृदप्यति जवादन्यालयं गच्छति ॥ ७७ ॥

गोष्ठात्समं शिशुभिरेव पुरःप्रदोहा-
न्माहाविमुञ्चति सुतस्तव नन्दजाये ।
एताहृशानि चरितानि निरीक्ष्य किंचि-
त्क्रुद्धा वयं यदिह् सत्यति मन्दमेयः ॥ ७८ ॥

कृष्णस्य मुग्धस्मितमाननाब्जं वीक्ष्यास्तकोपा वयमाशु बालम् :
आदाय दोर्भ्यां परिरभ्य भूयस्संप्रेषयामः परिचुम्बयन्त्यः ॥ ७९ ॥

श्रुत्वाखिलं साधुवदास्थितात्वं पश्यात्मजं गोकुलनाथजाये ।
एवं वदन्तीषु सखीषु काचिद्गोपांगना प्राह मुदा यशोदाम् ॥ ८० ॥

सखि किं बहुनः ममास्त्यमुष्मिन्सुतवत्प्रेम न चिन्तयान्यथा ।
शृणु चित्रमिदं तनूजवृत्तं नितरां विस्मयनीयमादरात् ॥ ८१ ॥

ग— अहं कदाचित्तनयाय दातुं क्षीरपायसं निर्माय भाजने साधु निधायात्मजमानेतुं यदा बहिर्गता तदैवावसरं प्रतीक्ष्यायमपि निगूढं गृहाभ्यन्तरं वयस्यैस्समं प्रविश्याखिलैस्तत्पायसमास्वाद्य भाजनमपि गोमूत्रभरितं विधायातिशीघ्रमारादन्तर्दधे च ॥

अज्ञात्वा च्छलमेतदात्मजयुता गत्वाहमन्तर्गृहं
दातुं पायसमुद्यता तनुभवायालोक्य तद्विस्मिता ।
एवं व्याजमयं करोति सततं मायामयस्ते सुतो
वाचां नो विषयं तनूजचरितं कल्याणशीलेद्भुतम् ॥ ८२ ॥

ग— इत्थं कस्याश्चिद्वचनं निशम्यान्तिकस्थान्याप्येवमवादीत् गोकुलेश्वरि सर्वलोकचित्तमोहनेन नन्दात्मजेनाहितां ममाखिलामापदं वक्तुं नालमप्यतिविस्मयनीयमेकं चरितं सादराकर्णय ॥

मया कदाचिन्मम पूर्वबन्धुं
वृद्धं गदार्तं नयनेन हीनम् ।
समीक्षितुं गोपमुपालयस्थं
विनिर्मितोपूप उपायनाय    ॥ ८३ ॥

निबध्य तद्भाजनसंस्थमन्त-
र्निधाय सुप्रागमनं सखीनाम् ।
प्रतीक्ष्य किञ्चित्कमलेक्षणोयं
तदा समित्रो गृहमाजगाम    ॥ ८४ ॥

दृष्ट्वापूपं प्रहृष्टस्सह सखिभिरयं सर्वमास्वाद्य तस्मि-
न्पात्रे कृत्वा करीषं कबळमथ जवात्पूर्ववत्साधु बध्वा ।
यातश्चाहं प्रबुद्धा तदनु करतले भाजनं तद्गृहीत्वा
साकं गत्वा सखीभिः पशुपगृहमदाम्मन्दमाहूयतं तत् ॥ ८५ ॥

ग— तदनु प्रवयास्सोपि तत्समादाय किमिदमित्यापृच्छ्यानिहृष्टः कथञ्चिन्मन्दमन्दं बन्धनमामुच्याभ्यर्णगामिभ्योप्येकैकं दत्वा स्वयमप्यत्युत्कण्ठया द्वयोरपि हस्तयोर्द्वयं द्वयमादायास्वदन कथमेतत् गोमयगन्धवदित्यन्वयुङ्क्त । तावदस्य गोमयगन्धस्य मूलं नास्तीति वदन्त्यां मयि स्थविरोप्येतत् गोमयमेवेत्युक्त्वा मुहुर्मुहुर्वमन्नन्तिकस्थानपि तत्परीक्षितुमन्वयुङ्क्त ॥

आस्वाद्य तत्किमपि तेपि कपर्दिकारं
कृत्वाननेन विवशा बहिरेत्य पश्चात् ।
संवीक्ष्य भाजनगतं तदिदं विदित्वा
व्याजं मयि प्रकुपिता ववृधुर्दुरन्तिम    ॥ ८६ ॥

निशम्य तेषां विविधां दुरुक्तिं
नम्राननाहं त्रपया गृहं स्वम् ।
अश्रौषमागत्य मुखाच्छिशूनां
कृष्णस्य कर्मेति विचित्रमेतत् । ॥ ८७ ॥

एतादृशं चापलमस्य नो चे-
न्नियच्छसित्वं कथमत्र कुर्मः ।
वासं यशोदे वद साधुशीले
श्रुत्वेति तासां गिरमाह सापि ॥ ८८ ॥

सख्यः प्रब्रूत यूयं कथमह मधुनैवात्मजं दण्डयेयं
ज्ञानं नास्त्यस्य किंचित्तनुभवविहृतं सर्वमत्रैव दद्याम् ।
इत्युक्त्वा भाजनाद्यं निखिलमपि मुदा नन्दपत्न्या प्रदत्तं
हृष्टास्सर्वं गृहीत्वा हरिमपि नितरां लालयन्त्यो ययुस्ताः ॥

हृष्टासु यातासु च तासु सूनुं
मा विप्रियं किंचन नाह किं च ।
आदाय पुत्रं व्रजनाथपत्नी
प्रदाय मोदात्स्तनमावसन्न ॥ ॥ ९० ॥

व्रजयुवतिगृहाद्यो लीलयाहृत्य मुग्ध-
न्मधुगुळनवनीताद्यावमद्धृष्टचेताः ।
स तु सरसिजनेत्रस्सर्वतापापहारी
दिशतु निखिलसौख्यं नन्दसूनुस्सदा मे ॥ ९१ ॥

चम्पूभागवते तृतीयस्तबकस्समाप्तः ॥

